**ॐ आं ह्रीं क्रौं हं सः अस्यां मूर्तौ भगवतः (लक्ष्म्याः/ सुदर्शनभगवतः/ हनूमतः)वाक्पाणिपादोपस्थपायव इति कर्मेन्द्रियाणि,श्रोत्रं चक्षुस्त्वग्घ्राण-रसनमन इति ज्ञानेन्द्रियाणि इहैवागत्य सुखेन चिरं तिष्ठन्तु स्वाहा।**

**ॐ आं ह्रीं क्रौं हं सः अस्यां मूर्तौ भगवतः (लक्ष्म्याः/सुदर्शनभगवतः/ हनूमतः) प्रणवेन गर्भाधानादिषोडशसंस्कारान् सम्भावयामि।**

## अथ आराधना

**प्रतिष्ठापितप्रतिमा मण्डलस्थघटोपरि स्थापनीया। भगवत्समाराधनोपयोगीनि वस्तूनि सम्पाद्य पञ्चपात्रादीन् प्रक्षाल्य एकस्मिन् घटे शुद्धजलं पूरयित्वा तत्र शोषण-दहन-प्लवनानि कृत्वा गन्ध-पुष्पसहितं तुलसीदलं निक्षिप्य मूलमन्त्रेणाभिमन्त्र्य पञ्चसु पात्रेषु जलं स्थापयित्वा अर्घ्य-पाद्य-आचमनीय-स्नानीय-शुद्धोदकपात्राणि परिकल्प्य ॐ विं विरजायै नमः इति विरजामावाहयेत्।** (प्रतिष्ठा गरिएको प्रतिमा मण्डलमा रहेको घडामाथि स्थापना गर्नुपर्दछ। भगवत्सेवाका लागि आवश्यक वस्तुहरू तयार पारी एउटा घडामा शुद्ध जल भरेर त्यसमा पहिले शोषण, दहन र प्लवन गर्ने। जस्तै— देब्रे हत्केलामा **यं** (वायुबीज)लेखेर **ॐ यं वायवे नमः शोषयामि** भनेर जलपात्रमा घुमाउने। दाहिने हत्केलामा **रम्**(अग्निबीज) लेखेर **ॐ रम् अग्नये नमः दाहयामि** भनेर जलपात्रमा घुमाउने। फेरि देब्रे हत्केलामा **वं** (वरुणबीज) लेखेर **ॐ वं वरुणाय नमः प्लावयामि** भनेर जलपात्रमा घुमाउने। अब त्यस घडाको जलमा तुलसीपत्र, गन्ध, पुष्प आदि सुगन्धित द्रव्य राखेर मूलमन्त्रको अनुसन्धान गर्दै सम्पूर्ण तीर्थको भावना गर्ने र भगवान्का अगाडि राखिएको टेबुलमा थाली राखी त्यसको आग्नेय कोणमा अर्घ्य(भगवान्को हात धुने जल)पात्र, नैर्ऋत्यकोणमा पाद्य(श्रीचरण धुने जल)पात्र र वायव्यकोणमा आचमनीय(श्रीमुखमा आचमन गराउने जल)पात्र, ईशानकोणमा स्नानीय (भगवान्लाई स्नान गराउने जल)पात्र र मध्यभागमा शुद्धजल(प्रत्येक उपचार पछि शुद्धि गर्नको लागि जल)पात्र राखेर पहिले अभिमन्त्रण गरेको घडाको जल पाँचै कटौरीमा भरी हातले सबैलाई क्रमशः छुँदै— **इदमर्घ्यम्,**

**इदं पाद्यम्, इदमाचमनीयम्, इदं स्नानीयम्, इदं शुद्धोदकम् परिकल्पयामि"** भन्ने। त्यसपछि अर्घ्यपात्रमा अरु चारै पात्रहरूबाट एक-एक आचमनी जल मिलाउने। अब अर्घ्यपात्रको एक आचमनी जल शिरको माथितिर लगी **"ओम् विं विरजायै नमः"** भन्दै विरजाको आवाहन गरेर पाँचै कटौरीमा त्यो जल मिलाउने र आचमनीयमा रहेको शेषजल सबै सामग्रीमा र आफ्ना शिरमा पनि छिटेर पवित्र गर्ने।

**ततः निम्नश्लोकान् अनुसन्दधानः सपरिवारं भगवन्तं ध्यायेत् –**

(तलका श्लोकहरू पाठ गर्दै भगवान्को ध्यान गर्ने)

**सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा**
**जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय।**
**पश्चाद् बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे**
**देवीभूषादिजुष्टो जनयतु जगतां शर्म वैकुण्ठनाथः॥**
**कूर्मादीन् दिव्यलोकान् तदनुमणिमयं मण्डपं तत्र शेषं**
**तस्मिन् धर्मादिपीठं तदुपरिकमलं चामरग्राहिणीश्च।**
**विष्णुं देवीविभूषायुधगणमुरगं पादुके वैनतेयं**
**सेनेशं द्वारपालान् कुमुदमुखगणान् विष्णुभक्तान् प्रपद्ये॥**
**जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन।**
**नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज॥**
**स्वशेषभूतेन मया स्वीयैः सर्वपरिच्छदैः।**
**विधातुं प्रीतमात्मानं देवः प्रक्रमते स्वयम्॥**

**समस्तपरिवारविशिष्टाय सर्वदिव्यमङ्गलविग्रहाय श्रीमते नारायणाय नमः॥**

(एक दिनभन्दा लामो अनुष्ठानमा दोस्रो दिनदेखि प्रातः भगवान्को सन्निधिमा साष्टाङ्ग गरी उठेर सर्वप्रथम माथि बताइएअनुसार अर्घ्यादि परिकल्पना गरेर भगवान्को उत्थापन र मङ्गल-आरती गर्नुपर्छ। अनि मात्र प्रार्थनाबाट क्रमशः आराधना सुरु हुन्छ। साँझको आराधना सम्पन्न गरी भगवान्लाई शयन गराउनुपर्छ।)

**अथ संहार न्यासः**

**ॐ लां नमः पराय सर्वात्मने नमः पादयोः स्पर्शः** (पाउमा छुने)

**ॐ वां नमः पराय निवृत्यात्मने नमः उपस्थे स्पर्शः** (उपस्थ स्पर्श गर्ने)

**ॐ रां नमः पराय विश्वात्मने नमः हृदये स्पर्शः** (हृदयमा स्पर्श गर्ने)

**ॐ यां नमः पराय विश्वात्मने नमः नासिकाग्रभागे स्पर्शः**

(नासिकाका अग्र भागमा स्पर्श गर्ने)

**ॐ षां नमः पराय परमेष्ठ्यात्मने नमः शिरसि स्पर्शः** (शिरमा स्पर्शगर्ने)

**अथ सृष्टि न्यासः**

**ॐ षां नमः पराय परमेष्ठ्यात्मने नमः शिरसि स्पर्शः** (शिरमा स्पर्शगर्ने)

**ॐ यां नमः पराय विश्वात्मने नमः नासिकाग्रभागे स्पर्शः**

(नाकका अगाडि स्पर्श गर्ने)

**ॐ रां नमः पराय विश्वात्मने नमः हृदये स्पर्शः** (हृदयमा स्पर्श गर्ने)

**ॐ वां नमः पराय निवृत्यात्मने नमः उपस्थे स्पर्शः** (उपस्थमा छुने)

**ॐ लां नमः पराय सर्वात्मने नमः पादयोः स्पर्शः** (पाउमा छुने)

**हस्तौ प्रक्षालयेत्।** (हात धुने)

आवाहनम् – (आवाहन गर्ने)

**ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात्।**
**सभूमिँसर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥**

ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः॥

आगच्छ भगवन् देव स्थाने चात्र स्थिरो भव।
यावत् पूजां करिष्यामि तावत् त्वं सन्निधौ भव॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः।**
**समस्तपरिवारं श्रीमन्तं नारायणम् आवाहयामि।**

**आसनम्** – (आसन दिने)

**ॐ पुरुषऽएवेदꣳसर्वं यद्भूतं यच्च भाव्यम् ।**
**उतामृतत्त्वस्येशानो यदन्नेनातिरोहति ॥**
सद्रत्नजाम्बूनदनिर्मितं विभो वरासनं सर्ववरप्रदाय ते ।
समर्पये सर्वजगन्निवासिने सुनिर्मलज्ञानघनप्रदायिने ॥
**समस्तपरिवाराय श्रीमते नारायणाय नमः आसनं समर्पयामि ।**

**अर्घ्यम्** – (अर्घ्य)

**ॐ एतावानस्य महिमातोज्ज्यायाँश्च पूरुषः ।**
**पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतन्दिवि ॥**
यः सर्वलोकस्य समाश्रयश्च पूज्यश्च मान्यश्च दिवौकसामपि ।
गृह्णातु सोऽर्घ्यं परिपूर्णकामः प्रसीदतां ब्रह्ममहाविभूतिः ॥
**समस्तपरिवाराय श्रीमते नारायणाय नमः हस्तयोः अर्घ्यं समर्पयामि ।**

**पाद्यम्** – (पाद्य)

**ॐ त्रिपादूर्द्ध्वऽउदैत्पुरुषः पादोस्येहाभवत्पुनः ।**
**ततो विष्वङ् व्यक्क्रामत्साशनानशनेऽअभिः ॥**
यो राजते यज्ञपतिश्च यज्ञे सर्वस्य लोकस्य शरण्यभूतः ।
यज्ञेश्वरो यज्ञवपुश्च विष्णुः पाद्यं प्रगृह्णातु स वासुदेवः ॥
**समस्तपरिवाराय श्रीमते नारायणाय नमः पादयोः पाद्यं समर्पयामि ।**

**आचमनीयम्** – (आचमनीय)

**ॐ ततो विराडजायत विराजोऽअधिपूरुषः।**
**सजातोऽअत्यरिच्यतपश्चाद् भूमिमथो पुरः ॥**
योऽसौ भवान् सर्वजगत्प्रधानो यस्य प्रसादेन भवन्ति लोकाः ।
सत्वं कुरुष्वाचमनं वरेण्य भव प्रसन्नो मयि दीननाथ ॥
**समस्तपरिवाराय श्रीमते नारायणाय नमः मुखे आचमनीयं समर्पयामि ।**

दन्तधावनम् – (दन्तधावन)

**ॐ तद्विष्णोः परमं पदँसदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्।**
समस्तपरिवाराय श्रीमते नारायणाय नमः दन्तधावनार्थे तुलसीपत्रं समर्पयामि।

जिह्वानिर्लेखनम् – (जिब्रो साफ गरिदिने)

**ॐ तद्विप्रासो विपण्यवो जागृवाँसस्ममिन्धते।**
**विष्णोर्यत्परमं पदम्।**

समस्तपरिवाराय श्रीमते नारायणाय नमः जिह्वानिर्लेखनार्थे तुलसीपत्रं समर्पयामि।

गण्डूषणम् – (कुल्ला गराउने)

**ॐ द्वासुपर्णौ सयुजौ सखायौ समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति॥**

समस्तपरिवाराय श्रीमते नारायणाय नमः गण्डूषणं समर्पयामि इति त्रिवारम् आचमानीयं जलं समर्पयेत्।

मुखप्रक्षालनम् – (मुख धोइदिने)

**ॐ नारायणाय विद्महे वासुदेवाय धीमहि तन्ने विष्णुः प्रचोदयात्।**
समस्तपरिवाराय श्रीमते नारायणाय नमः मुखप्रक्षालनार्थे शुद्धोदकं समर्पयामि।

**ततः शुद्धपात्रे चन्दनैः अष्टकोणं विलिख्य तन्मध्ये मूलमन्त्रं विलिख्य, तदुपरि तुलसीदलानि निक्षिप्य वस्त्रेण आच्छाद्य तदुपरि स्नानार्थं भगवन्तं (शालग्रामं प्रतिमां वा) स्थापयेत्।** (शुद्धपात्रमा चन्दनले अष्टदल बनाएर बीचमा मूलमन्त्र लेखेर त्यसमाथि तुलसीपत्र राखी वस्त्र बिच्छ्याएर त्यहाँ भगवान् (शालग्राम वा प्रतिमा) लाई राख्ने)

स्नानीयम् – (स्नानीय जलले स्नान गराउने)

**ॐ तस्माद्यज्ञात्सर्व्वहुतः सम्भृतम्पृषदाज्यम्।**
**पशूँस्ताँश्चक्रे व्वायव्यानारण्याग्राम्याश्च ये॥**
समाहृतैः स्वर्णघटैश्च स्वच्छैः स्वर्लोकस्रोतस्विनिदिव्यतीर्थैः।
स्नानं कुरुष्वाच्युतदिव्यमूर्ते देवाग्रजानां निधनप्रदायिन्॥
समस्तपरिवाराय श्रीमते नारायणाय नमः सर्वाङ्गे स्नानीयं समर्पयामि।

## पञ्चामृतस्नानम्

दुग्धस्नानम् – (दूधले स्नान गराउने)

**पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः।**

**पयस्वतीः प्रदिशः सन्तु मह्यम् ॥**

कामधेनुसमुद्भूतं सर्वेषां जीवनं परम्।

पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः दुग्धस्नानं समर्पयामि।**

शुद्धोदकस्नानम् – (शुद्ध जलले स्नान गराउने)

**शुद्धवालः सर्वशुद्धवालो मणिवालस्त आश्विनाः श्येतः श्येताक्षोऽरुणस्ते रुद्राय पशुपतये कर्णा यामा अवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ॥**

शुद्धं यत्सलिलं दिव्यं गङ्गाजलसमं स्मृतम्।

समर्पितं मया भक्त्या शुद्धस्नानाय गृह्यताम् ॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः शुद्धोदकस्नानं समर्पयामि।**

दधिस्नानम् – (दहिले स्नान गराउने)

**ॐ दधिक्राब्णोऽअकारिषं जिष्णोरश्वस्य वाजिनः।**

**सुरभिनो मुखाकरत्प्रणऽआयूꣳषितारिषत् ॥**

पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम्।

दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः दधिस्नानं समर्पयामि।**

दधिस्नानान्ते शुद्धोदकस्नानं समर्पयामि। (ॐ शुद्धवालः......फेरि शुद्धजल)

घृतस्नानम् – (घ्यूले स्नान गराउने)

**ॐ घृतं मिमिक्षे घृतमस्य योनिर्घृतेश्रितो घृतम्बस्य धाम।**

**अनुष्वधमा वह मादयस्व स्वाहा कृतं वृषभ वक्षि हव्यम् ॥**

नवनीतसमुत्पन्नं सर्वसंतोषकारकम् ।

घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥

समस्तपरिवाराय श्रीमते नारायणाय नमः घृतस्नानं समर्पयामि ।

घृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि। (ॐ शुद्धवालः.......फेरि शुद्धजल)

मधुस्नानम् — (महले स्नान गराउने)

**ॐ मधुव्वाताऽऋतायते मधुक्षरन्ति सिन्धवः माध्वीर्नः**

**सन्त्वोषधीः । ॐ मधुनक्तमुतोषसो मधुमत्पार्थिवँरजः ।**

**मधु द्यौरस्तु नः पिता ॥ ॐ मधुमान्नो वनस्पति र्मधुमाँ२ऽअस्तु**

**सूर्यः । माध्वीर्गावो भवन्तु नः ॥**

पुष्परेणुसमुत्पन्नं सुस्वादु मधुरं मधु ।

तेजः पुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥

समस्तपरिवाराय श्रीमते नारायणाय नमः मधुस्नानं समर्पयामि ।

मधुस्नानान्ते शुद्धोदकस्नानं समर्पयामि । (ॐ शुद्धवालः.....फेरि शुद्धजल)

शर्करास्नानम् — (सख्खरले स्नान गराउने)

**ॐ अपाँरसमुद्वयसँसूर्ये सन्तँसमाहितम् ।**

**अपाँरसस्य यो रसस्तं वो गृह्णाम्युत्तममुपयामगृहीतोऽसीन्द्राय**

**त्वा जुष्टङ्गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥**

इक्षुरससमुद्भूतं शर्करां पुष्टिदां शुभाम् ।

मलापहारिकां दिव्यां स्नानार्थं प्रतिगृह्यताम् ॥

समस्तपरिवाराय श्रीमते नारायणाय नमः शर्करास्नानं समर्पयामि ।

शर्करास्नानान्ते शुद्धोदकस्नानं समर्पयामि । (ॐ शुद्धवालः......फेरि शुद्धजल)

वस्त्रम् — (वस्त्र अर्पण गर्ने)

**ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानि जज्ञिरे ।**

**छन्दाँसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥**

शुद्धस्त्वमात्मा पुरुषः पुराणो जगत्सुत त्वं सुरलोकनाथ।
वस्त्राणि गृह्णीष्व मयार्पितानि दुकूलकौशेयसुपट्टकानि॥
**समस्तपरिवाराय श्रीमते नारायणाय नमः वस्त्रं समर्पयामि।**

**उपवस्त्रम् –** (उपवस्त्र अर्पण गर्ने)

**ॐ सुजातो ज्योतिषा सह शर्म्म वरूथमासदत्स्वः।**
**वासोऽअग्ने विश्वरूपꣳसंव्ययस्व विभावसो।**

उपवस्त्रं प्रयच्छामि देवाय परमात्मने।
भक्त्या समर्पितं देव प्रसीद परमेश्वर॥
**समस्तपरिवाराय श्रीमते नारायणाय नमः उपवस्त्रं समर्पयामि।**

**यज्ञोपवीतम् –** (जनै अर्पण गर्ने)

**ॐ तस्मादश्वाऽअजायन्त ये के चोभयादतः।**
**गावो ह जज्ञिरे तस्मात्तस्माज्जाताऽअजावयः॥**

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥
**समस्तपरिवाराय श्रीमते नारायणाय नमः यज्ञोपवीतं समर्पयामि।**

**चन्दनम् – (ऊर्ध्वपुण्ड्रम्)** (ऊर्ध्वपुण्ड्र लगाइदिने)

**ॐ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषञ्जातमग्रतः।**
**तेन देवाऽअयजन्त साध्याऽऋषयश्च ये॥**

आनन्दनो यः सुमतां परात्मा तापत्रयस्योपशमश्च यस्मात्।
तस्मै प्रयच्छामि सुचन्दनं वै काश्मीरकर्पूरविभावितं च॥
**समस्तपरिवाराय श्रीमते नारायणाय नमः ऊर्ध्वपुण्ड्रार्थे चन्दनं समर्पयामि।**

**पुष्प–माला–तुलसीदलानि –** (पुष्प, माला, तुलसी अर्पण गर्ने)

**ॐ यत्पुरुषं व्यदधुः कतिधाव्यकल्पयन्।**
**मुखङ्किमस्यासीत्किम्बाहू किमूरू पादाऽउच्येते॥**

य: सर्वगन्धोऽखिलविश्वरूपस्तस्मै प्रसूनानि समर्पयामि ।

कदम्बजातीवकुलोद्भवानि कुशेशय श्रीतुलसीदलानि ॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः पुष्प–माला–तुलसीदलानि समर्पयामि ।**

**धूपः –** (धूप अर्पण गर्ने)

**ॐ ब्राह्मणोऽस्य मुखमासीद्बाहूराजन्यः कृतः ।**

**ऊरू तदस्य यद्वैश्यः पद्भ्याँशूद्रोऽअजायत ॥**

धूपं दशाङ्गं शुभगन्धकञ्च गोसर्पिषाक्तं हृदयप्रियं च ।

समर्पये दिव्यनभास्पदाय क्षीराब्धिजासेवितसत्पदाय ॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः दशाङ्गधूपं समर्पयामि ।**

**दीपः –** (दीप देखाउने)

**ॐ चन्द्रमा मनसो जातश्चक्षोः सूर्योऽअजायत ।**

**श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ॥**

आदित्यचन्द्राग्निप्रकाशकाय वै सदा चिदानन्दमयाव्ययाय च ।

स्वाज्येन युक्तं शुभवर्त्तिभूषितं दीपं प्रयच्छामि तमःप्रणाशकम् ॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः दीपं दर्शयामि ।**

**हस्तौ प्रक्षालयेत् :** (हात शुद्धि गर्ने)

**ततो घृतदधिमधुकर्पूरान्वितं मधुपर्कं भगवते निवेदयेत् –** (घ्यू, दहि, मह र कपूर मिलाएर मधुपर्क समर्पण गर्ने)

योऽसौभवांस्तिष्ठति सर्वदेहे नारायणः सर्वजगत्प्रधानः ।

गृहाण चैवं सुरलोकनाथ भक्तोपनीतं मधुपर्कसंज्ञम् ॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः मधुपर्कं समर्पयामि ।**

**नैवेद्यम् –** (नैवेद्य निवेदन गर्ने)

**नैवेद्ये तुलसीपत्रं निक्षिप्य चक्रमुद्रां, सुरभिमुद्रां च प्रदर्श्य मूलमन्त्रं जपन् तुलसीपत्रसहित–ग्रासमुद्रया भगवन्तं भोजयामि इति भावयन् नैवेद्यं निवेदयेत्।** (नैवेद्यमा तुलसीपत्र राखी चक्रमुद्रा र सुरभिमुद्रा देखाई मूलमन्त्र जप्दै

तुलसीपत्र लिएर ग्रासमुद्राद्वारा 'भगवान्लाई भोजन गराउँदैछु' भन्ने भावनाले भोग लगाउने)

**ॐ प्राणाय स्वाहा, ॐ अपानाय स्वाहा, ॐ व्यानाय स्वाहा, ॐ उदानाय स्वाहा, ॐ समानाय स्वाहा।**

**ॐ नाभ्याऽआसीदन्तरिक्षꣳशीर्ष्णोद्यौः समवर्तत।**
**पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथालोकाँ२ऽअकल्पयन्॥**

त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये।
गृहाण सुमुखो भूत्वा प्रसीद पुरुषोत्तम॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः नैवेद्यं निवेदयामि।**

**पुनराचमनम् – नैवेद्यान्ते पुनराचमनीयं समर्पयामि समस्तपरिवाराय श्रीमते नारायणाय नमः।**

**ताम्बूलम्** – (ताम्बूल समर्पण गर्ने)

**ॐ यत्पुरुषेण हविषा देवायज्ञमतन्वत।**
**वसन्तोस्यासीदाज्यङ्ग्रीष्मऽइध्मः शरद्धविः॥**

एलादिपूगीफलचन्द्रसंयुतं प्रशस्तदेशोद्भवसौरभास्पदम्।
ताम्बूलपत्रं भगवन् समर्पये भवप्रवाहोपरमाय तेऽच्युत॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः ताम्बूलं समर्पयामि।**

**दक्षिणा** – (दक्षिणा समर्पण गर्ने)

**ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत्।**
**सदाधारपृथिवीन्द्यामुतेमां कस्मै देवाय हविषा विधेम॥**

दक्षिणा प्रेमसहिता यथाशक्तिसमर्पिता
तव तुष्टिकरीमेनां गृहाण पुरुषोत्तम॥

**समस्तपरिवाराय श्रीमते नारायणाय नमः दक्षिणां समर्पयामि।**

**नीराजनम्** – (आरार्तिक्यम्) (आरती गर्ने)

**ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः।**
**देवायद्यज्ञन्तन्वानाऽअबध्नन्पुरुषं पशुम्॥**

सुवर्तिकर्पूरविदीपितेन सुवर्णपात्रे विनियोजितेन।
नीराजये त्वामहमप्रमेय दिव्येन दीपेन दिवप्रदेन॥

श्रितकमलामुखमण्डल धृतकुण्डल ए।
कलितललितवनमाल जय जय देव हरे॥१॥

दिनमणिमण्डलमण्डन भवखण्डन ए।
मुनिजनमानसहंस जय जय देव हरे॥२॥

कालियविषधरगञ्जन जनरञ्जन ए।
यदुकुलनलिनदिनेश जय जय देव हरे॥३॥

मधुमुरनरकविनाशन गरुडासन ए।
सुरकुलकेलिनिदान जय जय देव हरे॥४॥

अमलकमलदललोचन भवमोचन ए।
त्रिभुवनभवननिधान जय जय देव हरे॥५॥

जनकसुताकृतभूषण जितदूषण ए।
समरशमितदशकण्ठ जय जय देव हरे॥६॥

अभिनवजलधरसुन्दर धृतमन्दर ए।
श्रीमुखचन्द्रचकोर जय जय देव हरे॥७॥

तव चरणे प्रणता वयमिति भावय ए।
कुरु कुशलं प्रणतेषु जय जय देव हरे॥८॥

श्रीजयदेवकवेरिदं कुरुते च मुदम्।
मङ्गलमुज्वललगीतं जय जय देव हरे॥९॥

समस्तपरिवाराय श्रीमते नारायणाय नमः नीराजनं समर्पयामि।

हस्तौ प्रक्षालयेत् : (हात शुद्धि गर्ने)

पुष्पाञ्जलिः — (पुष्पाञ्जलि गर्ने)

ॐयज्ञेन यज्ञमयजन्त देवास्तानि धर्म्माणि प्रथमान्यासन्।
तेह नाकम्महिमानः सचन्त यत्र पूर्व्वे साद्धयाः सन्ति देवाः॥

समस्तपरिवाराय श्रीमते नारायणाय नमः पुष्पाञ्जलिं समर्पयामि।

## विशेष-मन्त्रपुष्पाञ्जलिः

ॐ तद्विष्णोः परमम्पदꣳसदा पश्यन्ति सूरयः। दिवीव चक्षुराततम्। तद्विप्प्रासो विपण्यवो जागृवाꣳसः समिन्धते। विष्णोर्यत्परमम्पदम् । पर्याप्त्यानन्तरायाय सर्वस्तोमोऽतिरारात्र-मुत्तममहर्भवति सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेव तेनाप्नोति सर्वं जयति॥

ॐ शान्तिः, शान्तिः, शान्तिः।

पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरून्।
रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च॥
सर्वधर्मांश्च सन्त्यज्य सर्वकामाँश्च साक्षरान्।
लोकविक्रान्तचरणौ शरणं ते व्रजं विभो॥
त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च गुरुस्त्वमेव।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव॥
पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्।
नत्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव॥
तस्मात्प्रणम्य प्रणिधायकायं प्रसादये त्वामहमीशमीड्यम्।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम्॥

मनोवाक्कायैरनादिकालप्रवृत्तानन्ताकृत्यकरणकृत्याकरण-भगवदपचार-भागवतापचारासह्यापचाररूपनानाविधानन्तापचारान् आरब्धकार्यान् अनारब्धकार्यान् कृतान् क्रियमाणान् करिष्यमाणाँश्च सर्वानशेषतः क्षमस्व।

अनादिकालप्रवृत्तं विपरीतज्ञानम् आत्मविषयं कृत्स्नजगद्विषयञ्च विपीरतवृत्तञ्चाशेषविषयम् अद्यापि वर्त्तमानं वर्तिष्यमाणञ्च सर्वं क्षमस्व। मदीयानादिकर्मप्रवाहप्रवृत्तां भगवत्स्वरूपतिरोधानकरीं

विपरीतज्ञानजननीं स्वविषयायाश्च भोग्यबुद्धेर्जननीं देहेन्द्रियत्वेन भोग्यत्वेन सूक्ष्मरूपेण चावस्थितां दैवीं गुणमयीं मायां दासभूतः शरणागतोऽस्मि तवास्मि दास इति वक्तारं मां तारय।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्।
आस्थितः स हि युक्तात्मा मामेवानुत्तमाङ्गतिम्।
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥
इति श्लोकत्रयोदितज्ञानिनं मां कुरुष्व।

ॐ नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्।
ॐ महादेव्यै च विद्महे विष्णुपत्न्यै च धीमहि। तन्नो लक्ष्मीः प्रचोदयात्।
ॐ सुदर्शनाय विद्महे महाज्वालाय धीमहि। तन्नश्चक्रः प्रचोदयात्।

सुगन्धवल्लीशतपत्रजातिसुवर्णचम्पाबकुलोद्भवानि।
गृहाण देवेश मयार्पितानि प्रभो हरे श्रीतुलसीदलानि ॥

## केशवादिचतुर्विंशतिनामावलिः

(अर्चना गर्ने, विशेष अर्चनाहरू अर्चनावलि खण्डमा रहेका छन्)

१. ॐ केशवाय नमः
२. ॐ नारायणाय नमः
३. ॐ माधवाय नमः
४. ॐ गोविन्दाय नमः
५. ॐ विष्णवे नमः
६. ॐ मधुसूदनाय नमः
७. ॐ त्रिविक्रमाय नमः
८. ॐ वामनाय नमः
९. ॐ श्रीधराय नमः
१०. ॐ हृषीकेशाय नमः
११. ॐपद्मनाभाय नमः
१२. ॐ दामोदराय नमः
१३. ॐ वासुदेवाय नमः
१४. ॐ सङ्कर्षणाय नमः
१५. ॐ प्रद्युम्नाय नमः
१६. ॐ अनिरुद्धाय नमः

१७. ॐ पुरुषोत्तमाय नमः
१८. ॐ अधोक्षजाय नमः
१९. ॐ नारसिंहाय नमः
२०. ॐ अच्युताय नमः
२१. ॐ जर्नादनाय नमः
२२. ॐ उपेन्द्राय नमः
२२. ॐ हरये नमः
२४.ॐ श्रीकृष्णाय नमः

## श्रीलक्ष्मीद्वादशनामावलिः

१. ॐ श्रियै नमः
२. ॐ अमृतोद्भवायै नमः
३. ॐ कमलायै नमः
४. ॐ चन्द्रसौन्दर्यै नमः
५. ॐ विष्णुपत्न्यै नमः
६. ॐ वैष्णव्यै नमः
७. ॐ वरारोहायै नमः
८. ॐ हरिवल्लभायै नमः
९. ॐ शार्ङ्गिण्यै नमः
१०. ॐ देवदेविकायै नमः
११. ॐ लोकसुन्दर्यै नमः
१२. ॐ श्रीमहालक्ष्म्यै नमः

ॐ श्रीदेव्यै नमः
ॐ भूदेव्यैः नमः
ॐ नीलादेव्यै नमः
ॐ गोदादेव्यै नमः
ॐ आधारशक्त्यादिसमस्तवैकुण्ठपार्षदेभ्यो नमः
ॐ श्रीमते विष्वक्सेनाय नमः
ॐ श्रीशेषाय नमः
ॐ गरुडाय नमः
ॐ सुदर्शनाय हेतिराजाय नमः
ॐ पाञ्चजन्याय शंखाधिपतये नमः
ॐ कौमोदक्यै गदाधिपतये नमः
ॐ नन्दकाय खड्गाधिपतये नमः
ॐ शार्ङ्गाय चापाधिपतये नमः
ॐ सर्वेभ्यो दिव्यायुधेभ्यो नमः
ॐ सर्वेभ्यो भगवत्परिकरेभ्यो नमः
ॐ सर्वाभ्यो भगवत्परिचारिकाभ्यो नमः
ॐ अस्मद्गुरुभ्यो नमः
ॐ अस्मत्परमगुरुभ्यो नमः
ॐ अस्मत्सर्वगुरुभ्यो नमः
ॐ श्रीमते रामानुजाय नमः
ॐ श्रीपराङ्कुशदासाय नमः
ॐ श्रीमद्–यामुनमुनये नमः
ॐ श्रीराममिश्राय नमः
ॐ श्रीपुण्डरीकाक्षाय नमः
ॐ श्रीमन्नाथमुनये नमः
ॐ श्रीमते शठकोपाय नमः
ॐ श्रीमते विष्वक्सेनाय नमः
ॐ श्रियै नमः ॐ श्रीधराय नमः

ॐ समस्तपरिवारविशिष्टाय श्रीमते नारायणाय नमः

ॐ नृत्यवाद्यादिगीतादिपुराणपठनादिभिः ।
यथोपचारैः सकलैः सन्तुष्टो भव माधव ॥

चामरम् – (चमर डोलाउने)

यस्य प्रसादकलया बधिरः श्रृणोति पङ्गुः प्रधावति जवेन च वक्ति मूकः ।
अन्धः प्रपश्यति सुतं लभते च बन्ध्या तं देवदेववरदं शरणं प्रपद्ये ॥
जयतु जयतु देवो देवकीनन्दनोऽयं जयतु जयतु कृष्णो वृष्णिवंशप्रदीपः ।
जयतु जयतु मेघश्यामलकोमलाङ्गो जयतु जयतु पृथ्वीभारनाशो मुकुन्दः ॥

कर्पूरारार्तिक्यम् – (कपूर आरती गर्ने)

ॐ लक्ष्मीचरणलाक्षाङ्कसाक्षिश्रीवत्सवक्षसे ।
क्षेमङ्कराय सर्वेषां श्रीरङ्गेशाय मङ्गलम् ॥
श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवैकुण्ठनिवासाय श्रीनिवासाय मङ्गलम् ॥
अस्तु श्रीस्तनकस्तूरीवासनावासितोरसे ।
श्रीहस्तिगिरिनाथाय देवराजाय मङ्गलम् ॥
कमलाकुचकस्तूरीकर्दमाङ्कितवक्षसे ।
यादवाद्रिनिवासाय सम्पत्पुत्राय मङ्गलम् ॥
नीलाचलनिवासाय नित्याय परमात्मने ।
सुभद्राप्राणनाथाय जगन्नाथाय मङ्गलम् ॥
स्वोच्छिष्टमालिकाबंधगंधबंधुरजिष्णवे ।
विष्णुचित्ततनूजायै गोदायै नित्यमङ्गलम् ॥
श्रीनगर्यां महापुर्यां ताम्रपर्ण्युत्तरे तटे ।
श्रीतिंत्रिणीमूलधाम्ने शठकोपाय मङ्गलम् ॥
शेषो वा सैन्यनाथो वा श्रीपतिर्वेति सात्त्विकैः ।
वितर्क्याय महाप्राज्ञैर्भाष्यकाराय मङ्गलम् ॥

तुलामूलावतीर्णाय तोषिताखिलसूरये ।
सौम्यजामातृमुनये शेषांशायास्तु मङ्गलम् ॥
मङ्गलाशासनपरैर्मदाचार्यपुरोगमैः ।
सर्वैश्च पूर्वैराचार्यैः सत्कृतायास्तु मङ्गलम् ॥
ॐ समस्तपरिवारविशिष्टाय श्रीमते नारायणाय नमः ।

दर्पणप्रदर्शनम् — (भगवान्‌लाई ऐना देखाउने)

अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः
कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः ।
नृशंसः पापिष्ठः कथमहमितो दुःखजलधेः
अपारादुत्तीर्णस्तव परिचरेयं चरणयोः ॥

साष्टाङ्गप्रणामः — (साष्टाङ्ग गर्ने)

न धर्मनिष्ठोऽस्मि न चात्मवेदी न भक्तिमांस्त्वच्चरणारविन्दे ।
अकिञ्चनोऽनन्यगतिः शरण्य त्वत्पादमूलं शरणं प्रपद्ये ॥
नारायण दयासिन्धो वात्सल्यगुणसागर ।
एनं रक्ष जगन्नाथ बहुजन्मापराधीनम् ॥
जितन्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ॥
ॐ समस्तपरिवारविशिष्टाय श्रीमते नारायणाय नमः ॥



**काम कामप्रद शान्त कमनीयगुणालय ।**
**प्रद्युम्नाभ्येहि देवेश प्रद्योतितचराचर ॥**

**ॐ सश्रीकाय प्रद्युम्नाय नमः, सश्रीकं प्रद्युम्नम्** आवाहयामि **इत्यावाह्य**

**ॐ तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥**

**इति अर्घ्यादिसर्वोपचारैः पूजयेत् ।**

४. **उत्तरे** अनिरुद्धपूजनम् (उत्तरमा अनिरुद्धको पूजा)—

आवाहनम् —

**आवाहयाम्यहं देवमनिरुद्धं जगद्गुरुम् ।**
**पद्मपत्राग्रसङ्काशं रक्ताम्बरविभूषणम् ॥**
**अनिरुद्ध त्वमभ्येहि व्याप्ताशेषचराचर ।**
**सर्वेषां प्राणिनां कर्मसाक्षिभूत परात्पर ॥**

**ॐ सश्रीकाय अनिरुद्धाय नमः, सश्रीकम् अनिरुद्धम् आवाहयामि इत्यावाह्य**

**ॐ तद्विप्रासो विपण्यवो जागृवाꣳसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ इति अर्घ्यादिसर्वोपचारैः पूजयेत् ।**

## भगवदाराधनाविधिः

**चक्राब्जमण्डलस्य सर्वतोभद्रमण्डलस्य अष्टदलमण्डलस्य वा मध्यभागे एकं कलशं विन्यस्य तदुपरि देवदेवस्य प्रधानदेवस्य श्रीभूनीलासहितस्य श्रीमन्नारायणस्य प्रतिमां शालग्रामं वा स्थापयित्वा षोडशोपचारैः सम्पूजयेत् । अप्रतिष्ठित-प्रतिमादिषु पूर्वं प्राण-प्रतिष्ठां कुर्यात् ।**

(चक्राब्जमण्डल, सर्वतोभद्रमण्डल वा अष्टदलमण्डलमा एक कलश स्थापना गरी त्यहाँ सर्वेश्वर शालग्राम वा श्रीलक्ष्मीनारायण भगवान्को प्रतिमा स्थापना गरेर पूजा गर्ने । यदि प्रतिमाको प्रतिष्ठा भएको छैन भने निम्न प्रतिष्ठाविधिद्वारा प्रतिष्ठा गर्ने । कुनै पनि अनुष्ठानका लागि विधानअनुरूप निर्माण गरिएका यन्त्र तथा प्रतिमाहरूको अनिवार्य प्रतिष्ठा गर्नुपर्दछ । शालग्राम भगवान्को प्रतिष्ठा र आवाहन गर्नु पर्दैन ।)